॥ श्रीवेङ्कटेश्वराष्टोत्तर शतनामस्तोत्रम् ॥

श्री वेङ्कटेशः श्रीनिवासो लक्ष्मीपतिरनामयः
अमृतांशो जगद्वन्द्योगोविन्दश्शाश्वतः प्रभुं
शेषाद्रि निलयो देवः केशवो मधुसूदनः ।
अमृतोमाधवः कृष्णं श्रीहरिर्ज्ञानपञ्जर ॥ १॥

श्री वत्सवक्षसर्वेशो गोपालः पुरुषोत्तमः ।
गोपीश्वरः परञ्ज्योतिर्वैकुण्ठ पतिरव्ययः ॥ २॥

सुधातनर्यादवेन्द्रो नित्ययौवनरूपवान् ।
चतुर्वेदात्मको विष्णु रच्युतः पद्मिनीप्रियः ॥ ३॥

धरापतिस्सुरपतिर्निर्मलो देवपूजितः ।
चतुर्भुज श्चक्रधर स्त्रिधामा त्रिगुणाश्रयः ॥ ४॥

निर्विकल्पो निष्कळङ्को निरान्तको निरञ्जनः ।
निराभासो नित्यतृप्तो निर्गुणोनिरुपद्रवः ॥ ५॥

गदाधर शार्ङ्गपाणिर्नन्दकी शङ्खधारकः ।
अनेकमूर्तिरव्यक्तः कटिहस्तो वरप्रदः ॥ ६॥

अनेकात्मा दीनबन्धुरार्तलोकाभयप्रदः ।
आकाशराजवरदो योगिहृत्पद्म मन्दिरः ॥ ७॥

दामोदरो जगत्पालः पापघ्नोभक्तवत्सलः ।
त्रिविक्रमशिंशुमारो जटामकुटशोभितः ॥ ८॥

शङ्खमध्योल्लसन्मञ्जूकिङ्किण्याध्यकरन्दकः ।
नीलमेघश्यामतनुर्बिल्वपत्रार्चन प्रियः ॥ ९॥

जगद्व्यापी जगत्कर्ता जगत्साक्षी जगत्पतिः ।
चिन्तितार्थप्रदो जिष्णुर्दाशरथे दशरूपवान् ॥ १०॥

देवकीनन्दन शौरि हयग्रीवो जनार्धनः ।
कन्याश्रवणतारेज्य पीताम्बरोनघः ॥ ११॥

वनमालीपद्मनाभ मृगयासक्त मानसः ।

अश्वारूढं खड्गधारीधनार्जन समुत्सुकः ॥ १२॥

घनसारसन्मध्यकस्तूरीतिलकोज्ज्वलः ।
सच्चिदानन्दरूपश्च जगन्मङ्गळदायकः ॥ १३॥

यज्ञरूपो यज्ञभोक्ता चिन्मयः परमेश्वरः ।
परमार्थप्रद श्शान्तश्श्रीमान् दोर्धण्ड विक्रमः ॥ १४॥

परात्परः परब्रह्मा श्रीविभुर्जगदीश्वरः ।
एवं श्री वेङ्कटेशस्यनाम्नां अष्टोत्तरं शतम् ॥ १५॥

पठ्यतां शृण्वतां भक्त्या सर्वाभीष्ट प्रदं शुभम् ।
॥ इति श्री ब्रह्माण्ड पुराणानान्तर्गत
श्री वेङ्कटेश्वराष्टोत्तर शतनाम स्तोत्रं समाप्तम् ॥